ष्यतेत्वन्यो विरोधः । तथाहि—यत्तदद्रेश्यमग्राह्यम् । न चक्षुषा गृह्यते नापि वाचा"—इत्येकत्र चक्षुर्वागादीनामविषयत्वं ब्रह्मण्याख्यायते । तेन ब्रह्मणो निराकारत्वं सिध्यति । अन्यत्र पुनः तद्भूतयोनिं परिपश्यन्ति धीराः, कश्चिद्धीरः प्रत्यगात्मानमैक्षत्, सर्वे वेदा यत्पदमामनन्तीत्यादिना चक्षुर्वागादिविषयत्वं प्रतिज्ञायते । तेन ब्रह्मणः साकारत्वं सिध्यति । तथा चावश्यमेकस्य यथार्थवादित्वात् प्रामाण्यमन्यस्य त्वौपचारिकार्थवादित्वाद् गौणत्वं वक्तव्यमित्युत्तरपक्षनिर्धारणे कर्तव्ये केचित् तावदाहुः । तदव्यक्तमेवास्तीति चक्षुर्वागाद्यविषयत्वमेव ब्रह्मणो युक्तम् । आह हि श्रुतिर्बहुशोऽव्यक्तत्वम् यदि मन्यसे सुवेदेति दभ्रमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपं मीमांस्यमेव ते मन्ये विदितम् । संविदन्ति न यं वेदा विष्णुर्वेद न वै विधिः । यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेत्यादिः ॥ तस्मादिन्द्रियादिविषयतावादो ब्रह्मणः स्यादौपचारिक एवेति प्राप्ते सिद्धान्त उच्यते । अपि संराधने दृश्यं भवत्यैश्वरं रूपमिति प्रत्यक्षानुमानाभ्यां गम्यते । प्रत्यक्षं तावदुपासकानां स्वानुभवः । अनुमानं तु ध्रुवादीनां प्रत्यक्षोपाख्यानाद्भवति । श्रुति स्मृतिभ्यां च । ततस्तु तं पश्यति निष्कलं ध्यायमानः, नायमात्मा प्रवचनेन लभ्यो यमेवैष वृणुते तेन लभ्य इत्यादि श्रुतेः । भक्त्या त्वनन्यया लभ्यः, ज्ञातुं द्रष्टुं च तत्वेनेत्यादि स्मृतेश्च ॥ न चाकारमन्तरेण साक्षात्कारः संभवति । तस्मात् साकारमनन्तगुणपूर्णं चेदं ब्रह्मेति सिद्धम् ॥ इति ब्रह्मणि साकारत्वस्थापनेन साकारनिराकारविरोधपरिहाराधिकरणं वल्लभीयम् ॥ २ ॥

**प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ २५ ॥ अतोऽनन्तेन तथाहि लिङ्गम् ॥ २६ ॥ उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २७ ॥**

पुनरन्यः प्रत्यवतिष्ठते । प्रकाशादिवन्निर्विशेषमेव ब्रह्म प्रतिपत्तव्यं न तु सवधर्मवत् । यथा प्रकाशः सूर्य्यचन्द्राग्निमणिप्रभृतीनां भिन्नभिन्नरूपो दृश्यते । जलं वा गङ्गायमुनाकूपादीनां भिन्नवद्भवति । सुवर्णं चाष्टजातीयं कटककुण्डलादिभेदाच्चानेकरूपं क्रियते तथापि तेषां प्रकाशत्वेन जलत्वेन सुवर्णत्वेन चैकरूप्यं प्रतिपद्यन्ते एवं ब्रह्मणोपि निर्विशेषत्वं स्यात् । यत्तु नानारूपेश्वरसाक्षात्कारान्यथानुपपत्त्या नानारूपवत्वं ब्रह्मणः कल्प्यते इति कश्चिद् ब्रूयात् तत्तुच्छम् । ईश्वरस्य साक्षात्कारो नाम प्रकाशस्तु तपःप्रणिधानादिकर्म्मणि भक्तेच्छानुरोधेनैवाभ्यासाद्बहुवारमनेकरूपेण च प्रकटीभवतीति तादृशानेकरूपदर्शनस्य वस्तुनिर्णायकत्वासंभवात् ॥ १ ॥

अत एव चाभ्यासादनन्तेन रूपेणाविर्भावः संपद्यते । यदि केनचिद्धर्मविशेषेण धर्म्मं तद्रूपवत् स्यात्तर्हि तद्धर्म्मा स तेनैकरूपेणैवाविर्भवेत् । न ह्येकं वस्तु स्वतोऽनेकविधं भवति । तथाहि विग्रहधारणमेव तत्र लिङ्गं न स्वरूपमिति कृत्वा निर्धर्मकमेव ब्रह्म सिध्यतीति प्राप्ते ॥ २ ॥ सिद्धान्तमाह—उभयव्यपदेशात्त्वहिकुण्डलवत्

ब्रह्मस्वरूपनिर्णयो हि शास्त्रैकप्रमाणसाध्यो न युक्तिसाध्यः । शास्त्रे च निर्गुणत्वेनानन्तगुणत्वात् सर्वविरुद्धधर्माश्रयत्वेन चोभयथा व्यपदेशो दृश्यते । तस्मादुभयरूपं ब्रह्म प्रतिपत्तव्यम् । तदुभयमपि वास्तविकं नित्यम् । विरोधस्तु नास्ति । गुणानामपितदात्मकत्वेन तदभेदान्निर्गुणत्वस्यैवमाश्रयाश्रयिभावेन गुणानां स्फुरणात् गुणवत्त्वस्य च संभवादुभयोपपत्तेः । एकस्यानेकधाभानमपि न विरुद्धम् । अहिकुण्डलवत् संभवात् । यथा सर्प ऋजुशरीरः कुण्डलश्चाऽप्यनेकधा भवति तथा निर्गुणं निराकारं ब्रह्माप्यचिन्त्यशक्त्या नानागुणं नानाकारं स्फुरतीति संभवति । तस्माद्विरुद्धाविरुद्धसर्वधर्मवदेकं ब्रह्मास्ति इति सिद्धान्तः । इत्यप्रत्याम्नेयसर्वधर्मवद् ब्रह्माधिकरणं वल्लभीयम् ॥ ३ ॥

## प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २८ ॥ पूर्ववद्वा ॥ २९ ॥ प्रतिषेधाच्च ॥ ३० ॥

ननु ब्रह्मणः सर्वधर्मोपपन्नत्वं सिद्धान्तितं तत्रेदं जिज्ञास्यते-धर्मा इमे ब्रह्मणो भिन्ना वा ब्रह्मैव सन्तीति । भिन्नत्वे एकमेवाद्वितीयं ब्रह्मेति ब्रह्माद्वैतश्रुतिविरोधः स्यात् । ब्रह्मत्वे तु ब्रह्मणः सर्वधर्मोपपन्नं व्याहन्यते । स्वेनाश्रयाश्रयिभावानुपपत्तेरिति चेदत्र द्वेधा समाधीयते प्रकाशाश्रयवद्वा तेजस्त्वादित्येकम् । पूर्ववद्वा प्रतिषेधाच्चेत्यपरम् । तेजसां तावत् सूर्य्याग्न्यादीनां बिम्बप्रकाशभेदाद्द्वैविध्यं दृश्यते । तत्र प्रकाशाश्रयो बिम्ब एव यदि सूर्य्योऽध्यवसीयते तदा सूर्य्यस्य प्रकाश इति सूर्य्यसंबन्धितया प्रकाशः पृथग् व्यवह्रियते । यदि तु प्रकाशावच्छिन्नं सर्वमेव मण्डलं सूर्य्य इष्यते तदानीमद्वैतमुपपद्यते । तेजस इत्थंभूतरूपत्वात् सर्वत्रैवं भेदाभेदव्यपदेशः शक्यं कर्तुम् । वस्तुधर्मस्यानाक्षेप्यत्वात् । एवमेव ब्रह्मण्यपि प्रतिपत्तव्यम् । तस्यापि चिद्रूपस्य तेजस्त्वात् । सूर्य्यस्याङ्गिनोऽङ्गभूतप्रकाशवद्धर्मिणो ब्रह्मणः सर्वे धर्मा अङ्गभूतास्तदतिरिक्तानतिरिक्तरूपाः सन्तीत्यतिरिक्तत्वविवक्षायां सर्वधर्मोपपन्नत्वं ब्रूमः । अनतिरिक्तत्वविवक्षायां तु शुद्धब्रह्माद्वैतं प्रतिजानीमः । एकस्मिन्नेवार्थे प्रतिपत्तिद्वैधेऽपि वस्तुद्वैधाभावादविरोधः । इत्युपपत्तिविचारपक्ष एव सिद्धान्तमतेनोपनीयते ॥ १ ॥

अथोत्पत्तिविचारपक्षेणाप्यन्ये समादधते । पूर्वं तावदरूपवदेव हीत्यादिपञ्चसूत्र्या यः सिद्धान्त उक्तः सोऽभ्युपगन्तव्यः । तत्र निर्धर्मकमेव पूर्वं ब्रह्मासीत् । ततश्च एकोऽहं बहु स्यामिति सृष्टीच्छया क्रियारूपेण प्रपञ्चरूपेण च सर्वेऽप्येते धर्मा ब्रह्मकार्य्यभूता उत्पन्नाः । तत्र च कारणं कार्य्याद्भिद्यते कार्य्यनाशेऽपि कारणानाशात् । तथा च कार्य्यकारणयोरभेदश्च व्यपदिश्यते भेदश्च । यथा कटककुण्डलरुचकस्वस्तिकादयः स्वर्णाद्भिद्यन्ते परस्परतश्च भिद्यन्ते तथैते जगच्छवा ब्रह्मधर्मा ब्रह्मणो भिद्यन्ते परस्परतश्च भिद्यन्ते इति सर्वधर्मोपपन्नत्वं ब्रह्मणः शक्यं वक्तुम् । यथा वा तानि स्वर्णाभरणानि स्वर्णमेव सन्ति । वाचारम्भणं विकारो नामधेयं स्वर्णमित्येव

सत्यं तथैतानि जगन्त्यपि ब्रह्मकार्य्यभूतानि ब्रह्मैव सन्ति। तस्मादेकविज्ञानेन सर्व-विज्ञानप्रतिज्ञासिद्धिः सद्विद्यायाम् । तस्मादेकमेवाद्वितीयं ब्रह्मेति शुद्धब्रह्माद्वैत-वादश्चोपपन्नः। एकमेवाद्वितीयमिति श्रुतौ एवकारेणान्यनिषेधप्राप्तौ पुनरद्वितीय-मिति प्रतिषेधाच्च धर्मप्रतिषेधोऽपि गम्यते। धर्मधर्मिभावप्रतिषेधाद्विशुद्धान्निर्द्ध-र्मकाद् ब्रह्मणः पश्चाद्धर्म्माणामभिव्यक्तिरित्युभयं ब्रह्मणि समञ्जसं भवति। इत्थं च प्रकारद्वये निदर्शिते सूत्रकृत्संमतिरुभयत्र दृश्यते। वल्लभीयानां तूपपत्तिः विचारपक्ष एवेति सिद्धान्तः।

॥ इति सर्वधर्मोपपन्नब्रह्मणि शुद्धाद्वैतवादाधिकरणं वल्लभीयानाम् ॥ ४ ॥

## परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॥३१॥ सामा-न्यात्तु ॥३२॥ बुद्ध्यर्थः पादवत् ॥३३॥ स्थानविशेषात्प्रकाशा-दिवत् ॥३४॥ उपपत्तेः ॥३५॥ तथान्यप्रतिषेधात् ॥३६॥ अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥३७॥

एवं ब्रह्मणो धामणः स्वधर्मसापेक्षां द्वैताशङ्कां परिहृत्य धर्म्म्यन्तरसापेक्षां द्वैताशङ्कां परिहरति पूर्वोत्तरपक्षाभ्याम्। तत्र पूर्वपक्षं तावदाह—परमतः सेतून्मा-नसंबन्धभेदव्यपदेशेभ्यः। अतो ब्रह्मणः परमपि किञ्चिदुत्कृष्टमस्ति इति सेत्वादि-हेतुभ्यो ज्ञायते। अथ य आत्मा स सेतुर्विधृतिरिति ब्रह्मणः सेतुव्यपदेशात् तर-णानन्तरं पारे प्राप्यमन्यदस्तीत्यवगम्यते ॥ १ ॥

यावान् वायमाकाशस्तावानेषोऽन्तर्हृदये आकाश इत्युन्मानव्यपदेशेन परि-च्छिन्नत्वादन्यसत्तापि संभाव्यते ॥ २ ॥

उभावस्मिन् द्यावापृथिवी अन्तरे व समाहिते इत्याधाराधेयसंबन्धः ॥ ३ ॥

य एषोऽन्तरादित्ये हिरण्मयः पुरुषः, य एषोऽन्तरक्षणि पुरुषः—इत्येवं द्वयोः पुरुषयोरन्योन्यधर्मातिदेशो धर्मिभेदनिबन्धनो दृश्यते ॥ ४ ॥

तथा चास्य ब्रह्मणः परिच्छिन्नत्वोक्त्या परिच्छेदरहितं किञ्चिदन्यतत्वमस्ति इति लभ्यते इति प्राप्ते उच्यते। सामान्यात्तु ते व्यपदेशाः क्रियन्ते इति। ब्रह्मणि संसारसागरोत्तरणोपायत्वसामान्यात् सेतुव्यपदेशः। निर्लेपत्वसामान्यादाकाश-व्यपदेशः। कामादिदोहाय चतुष्पात्त्वपरिच्छेदः। अमृतत्वाय षोडशकलत्वपरि-च्छेदः। अदुर्लभत्वाय सम्बन्धोक्तिः। अक्षिस्थितपुरुषे दिव्यत्वज्ञापनायादित्य धर्म्मातिदेशः। अतो ब्रह्मणि गुणविशेषाख्यानाय सेतुत्वादिवचनं न तु तावता ब्रह्म-स्वरूपापकर्षे तात्पर्य्यम् ॥ * ॥

इत्थमन्यसमानत्वेन व्यपदेशस्तु तु दृष्यर्थः क्रियते पादवत्। यथा भूतादीनां पादत्वे विज्ञानमुपास्यर्थं तथेदमप्युपासनार्थं भविष्यति। इत्थं तु दृष्योपासना कार्य्येति॥ यथा सूर्य्यचन्द्राग्निप्रकाशादीनां सूर्य्यादिस्थानभेदात् समानधर्मत्वं नास्ति तथादित्याक्षिपुरुषयोरपि अक्ष्यादिस्थानविरोधात् समानधर्मत्वं न स्यादतस्तयोर्धर्मातिदेशः क्रियते इति नैतेन पुरुषद्वैविध्यम्॥ ७॥ उपपत्तेश्च सर्वोपनिषद्व्याख्यानामेकं ब्रह्मैवाद्वितीयतत्वं सिध्यति॥ न तत्समश्चाभ्यधिकश्च दृश्यते इतिश्रुत्या ततोऽन्यप्रतिषेधाद् ब्रह्मातिरिक्तधर्मितत्वकल्पनं नायकल्पनं॥ ❋॥ तस्मादनेन ब्रह्मणोऽन्यस्य प्रतिषेधवाक्येनायामशब्दादिभ्योऽवगतं सर्वगतत्वमप्यस्यैव ब्रह्मणो ज्ञेयम्॥ आकाशवत् सर्वगतश्च नित्यः। ज्यायान् दिवो ज्यायानाकाशात्। तेनेदं पूर्णं पुरुषेण सर्वम्। सर्वतः पाणिपादं तदित्याद्या व्यापकाभिधायिन्यः श्रुतय आयामशब्दाः। आदिशब्दो युक्त्यभिप्रायः॥ तथा च ब्रह्मैवेदं विश्वमद्वैतं सर्वधर्मोपपन्नं तत्वमिति सिद्धम्॥

इति ब्रह्मातिरिक्ततत्वप्रतिषेधाधिकरणं वल्लभीयानाम्॥ ५॥

अथ ब्रह्मणो महिमानमाह। अमीषां जीवादीनां सर्वमैहिकं पारत्रिकं वा फलमत ईश्वरादेवोपपद्यते। सर्वस्य वशी सर्वस्येशान इत्यादि श्रुतिभिस्तस्यैव वस्तुमात्रशासकत्वोक्त्या सर्वविधनिग्रहानुग्रहादिफलदातृत्वोपपत्तेः॥ ३८॥

"स वा एष महानज आत्माऽन्नादो वसुदान" इत्यादि श्रुतिभिस्तथा श्रुतत्वाच्च। "भवन्ति भावा भूतानां मत्त एव पृथग् विधाः" इति स्मरणाच्च॥ ३९॥

कर्मवादी जैमिनिस्त्वाचार्य्योऽतएव हेतोर्धर्मं फलदातारं मन्यते। तथाहि ईश्वरस्य जीवादिकर्मनिरपेक्षं स्वातन्त्र्येण फलदातृत्वाभ्युपगमे तस्य वैषम्यनैर्घृण्ये प्रसज्यैते, कर्मविधयश्च व्यर्थाः स्युः। कर्मसापेक्षत्वे तु कर्मण एवास्ततः फलदातृत्वमुपपद्यते। दर्शपूर्णमासज्योतिष्टोमादिविधिश्रुतिभिः कर्मणां फलप्रयोजकतायाः श्रुतत्वाच्च॥ ईश्वरस्य फलदातृत्ववचनान्यर्थवादतया नेयानि॥ ४०॥

इत्थं जैमिनिमतमुपन्यस्य तत्प्रत्याचक्षाणः सिद्धान्तमाह—पूर्वं तु बादरायणो हेतुव्यपदेशात् इति। बादरायणस्त्वाचार्य्यः पूर्वमेव मतमभिप्रैति॥ "एष ह्येव साधुकर्म कारयति"—इत्यादिश्रुत्या कर्मविधानेपीश्वरस्यैव हेतुव्यपदेशात्॥ वैषम्यनैर्घृण्यदोषस्त्वात्मसृष्ट्या परिहरणीयः। स्वतन्त्रस्येश्वरस्य फलोत्पत्तये कर्मणो द्वारीकरणं किमर्थमिति च—कृतप्रयत्नापेक्षास्त्विति सूत्रे पूर्वं विचारितमित्यास्ताम्॥ ४१॥

अतः फलार्थिभिर्भगवानेव सेव्यो नान्य इति सिद्धम्॥

॥ इतीश्वरस्य फलदातृत्वाधिकरणम् ( वल्ल. ) ६॥

इति जगद्धर्मविचारपादो द्वितीयः॥ २॥ ( औपाधिककर्मापादः )

## ॥ अथ प्रातिस्विकधर्मविचारपादः ॥ ३ ॥

### तत्रादौ उपास्यरूपनिर्णयाधिकरणम् ॥ १ ॥

सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥ भेदान्नेति चेदेकस्यामपि ॥ २ ॥ स्वाध्यायस्य तथात्वे हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३ ॥ दर्शयति च ॥ ४ ॥ उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥ ५ ॥ अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ६ ॥ न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥ ७ ॥ संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ८ ॥ व्याप्तेश्च समञ्जसम् ॥ ९ ॥ सर्वाभेदादन्यत्रेमे ॥ १० ॥ आनन्दादयः प्रधानस्य ॥ ११ ॥ प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥ इतरे त्वर्थसामान्यात् ॥ १३ ॥ आध्यानाय प्रयोजनाभावात् ॥ १४ ॥ आत्मशब्दाच्च ॥ १५ ॥ आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥ अन्वयादिति चेत्स्यादवधारणात् ॥ १७ ॥ कार्य्याख्यानादपूर्वम् ॥ १८ ॥ समान एवं चाभेदात् ॥ १९ ॥ सम्बन्धादेवमन्यत्रापि ॥ २० ॥ न वा विशेषात् ॥ २१ ॥ दर्शयति च ॥ २२ ॥ सम्भृतिद्युव्याप्त्यपि चातः ॥ २३ ॥ पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॥ २४ ॥

ब्रह्मैव सर्ववेदान्तप्रत्ययं बोध्यम् । सर्वैरपि वेदान्तवाक्यैरेकमिदं ब्रह्मैव प्रत्याय्यते । विधायकवाक्यादीनामेकरूपेण तत्र प्रतिपत्तेः ॥ १ ॥

अथ शाखाभेदेन वेदान्तानां भेदात्, प्रतिवेदान्तं चान्यान्यधर्मोपदेशात् । प्रतिपाद्यविषयस्य धर्मभेदादेकत्वं नास्तीति चेद् ब्रूयात् तत्र ब्रूमः । एकस्यामपि धर्मिव्यक्तौ भिन्नानेकधर्माः संभवन्तीति न धर्मभेदाद्धर्मिभेदः शक्यः ॥ अन्ये तु सूत्रमित्थं व्याचक्षते । भिन्नैर्धर्मैर्भिन्नशाखायां भिन्नोपनिषदि—ब्रह्मोपदिश्यते तस्मात्तत्र तत्र श्रुतौ प्रतिपाद्यं ब्रह्म भिद्यते इति चेन्नैतदेवं शक्यम् । एकस्यामपि शाखायामेकस्यामप्युपनिषद्येकस्यामपि श्रुतौ भिन्नैर्धर्मैर्बहुभिर्ब्रह्मोपदिश्यते । नैकस्यां

श्रुतौ प्रतिपाद्यं भेदेनाभिप्रेयते तद्वद्भिन्नशाखायामपि नैतत् प्रतिपाद्यं ब्रह्म भिन्नं स्यादिति ॥ २ ॥

ननु तर्हि तत्तच्छाखायां भेदेनोक्तानामुपासनाप्रकाराणामन्यशाखाया-मप्युपसंहारापत्तौ सर्वशाखिनां समुच्चयेनैक एवोपासनाप्रकारः स्याद् वेद्यैकत्वात्। उपासनाप्रकाराणां शाखाभेदेन भेदाभ्युपगमे तु वेद्यैकत्वं न स्यादिति चेत् तत्रो-च्यते—तत्तच्छाखिनां स्वस्वशाखोक्तप्रकारेणैव कर्मकरणेऽधिकारात् ते ताः स्वा-ध्यायस्य वेदस्य सामयागाद्यात्मकं समाचारं तथात्वेन तच्छाखोक्तप्रकारेणैव तेषां कर्तव्यतानियमः क्रियते सववत् । यथा सवा नाम होमविशेषा आथर्वणिकानामेव कार्य्यत्वेन नियम्यन्ते नान्येषाम् तथान्यत्रापि बोध्यम् ॥ ३ ॥

एवमपि वेद्यैकत्वं न विहन्यते । उपासनारूपभेदेऽपि सर्वै रूपैरेकस्यैवोपास्य-त्वेन विज्ञातव्यत्वात् । दर्शयति च शाखाभेदेऽपि वेद्यैकत्वं—"सर्वे वेदा यत्पदमा-मनन्तीत्यादिना ॥ ४ ॥

अथवा व्यवस्थां वक्ष्यामः । द्विविधा ह्युपासका दृश्यन्ते—एकान्तभक्ता अने-कान्तभक्ताश्च । ये निर्गुणं ब्रह्मोपासतेऽथवा सर्वैर्धर्म्मैरेकमेव शुद्धं ब्रह्मोपासते ते सामान्योपासका अनेकान्तभक्ता उच्यन्ते । ये पुनर्विष्णुं वा शिवं वा सूर्यं वा केन-चिद्विशेषरूपेणानियम्योपास्यं गुणविशेषविशिष्टं ब्रह्मोपासते ते विशेषोपासका एका-न्तभक्ताः स्युः । तत्रानेकान्तभक्तानां सर्वेष्वपि धर्मेष्वर्थस्योपास्यस्याभेदाद्विरो-धमानासंभवात् सर्वधर्म्मणां सर्वत्रोपसंहारः स्यात् । ये विष्णुगुणाः ये वा शिव-गुणा ये वा सूर्य्यगुणाः सर्वैरपि तैर्गुणैरविशेषं स एक एवोपास्यः संस्तूयते "त्वं विष्णुस्त्वं शिवः सूर्य्य इति । अथ विष्णुशिवादिरूपविशेषैकान्तभक्तानान्तु ये विष्णु-शिवादिपरस्परविरुद्धा गुणाः कृष्णशुक्लादयस्तेषां समुच्चयायोग्यत्वात् परस्परं नोप-संहारः स्यात् । समाने चाविरुद्धे धर्मे दयालुत्वानन्दमयत्वभयाभीष्टफलदातृत्वदुःख-हन्तृत्वादिरूपे विरोधाभावात् समुच्चयसंभवात् विधिविशेषवदुपसंहारः स्यादेव । शाखान्तरीयविष्णुकथर्माणां शाखान्तरीयविधेः शेषवत् ग्रहीतुः शक्यते कर्तुम् । तत्रानुक्ताविरुद्धधर्मान्तरसमुच्चयेन तद्विधिरूपं कल्प्यमितिभावः ॥ ५ ॥

ननु व्यवस्थायामप्यनेकान्तभक्तानामविशेषात् सर्वैरपिगुणैरुपासमानानां सर्वशाखोक्तसर्वधर्मोपसंहाराभ्युपगमे धर्माणां परस्परविरुद्धानामनेकरसत्वात् तदभिन्नत्वेन विवक्षितस्य ब्रह्मणो वेदान्तैकरसत्वं व्याहन्येत । तथा चैकरसत्वं प्रतिपादकाच्छब्दादन्यथात्वमनेकरसत्वं प्रसज्येतेति चेन्न । अविशेषात् । यथेदमेक-रसत्वं ब्रह्मणः शब्दतो निर्णीतं तथेदं विरुद्धानेकधर्मवत्त्वमपि ब्रह्मणः शब्दत एव निर्णीयते इति न शब्दादन्यथात्वं शक्यमाक्षेप्तुम् ॥ ६ ॥

अथवा नैष दोषः प्रसज्यते । परोवरीयस्त्वादिवत् प्रकरणभेदप्रयोगात् । परोवरीयस्त्वं नाम व्रतविशेषो दीक्षाप्रकरणे पठ्यते ततो दीक्षासहितस्यैव व्रतस्य परोवरीयस्त्वं नान्य एवमिहाप्युपक्रमोपसंहाराभ्यां ज्ञानप्रकरणं ज्ञानिनं प्रत्येव नानोपासक-

रसमदृश्यमग्राह्यमिति निरूपितम् । भक्तिप्रकरणे तु ध्यानोपयोगार्थमनेकविधा धर्मा उपासकरुचिसापेक्षा भिन्नभिन्नप्रकारेणाथर्वणोपनिषदि निरूप्यन्ते । तथा च प्रकरणभेदात् स्वरूपस्यान्यथात्वं नास्तीति बोध्यम् ॥ ७ ॥

ननु निर्गुणब्रह्मोपासका ज्ञानिन उच्यन्ते । सगुणब्रह्मोपासकास्तु भक्ताः स्युः । किन्तु एकमेवाद्वितीयं ब्रह्मेति श्रुत्या ब्रह्मातिरिक्तस्यासत्वाद् गुणानामपि सर्वेषां ब्रह्मत्वमेवावगम्यते । तथा च यथैकस्य धर्मिणो ब्रह्मत्वं तथैवामीषां धर्माणामपि सर्वेषां ब्रह्मत्वमिति धर्मधर्मिणोरभेदाध्यवसायात् सर्वधर्मोपपन्नमपीदं ब्रह्म निर्धर्मकत्वेनैवाध्यवसीयते शुद्धाद्वैतवादिभिर्वल्लभीयैरिति सिद्धान्तितं प्राक् । एवं स्थिते निर्गुणोपासकानां भक्तानां चाविशेषाद् ब्रह्मोपासकतया संघैकत्वं सिध्यति । संघैकत्वाच्च प्रकरणभेदो नास्तीति शब्दादन्यथात्वं तदवस्थमेव । अत आह । संघातश्चेत् प्रकरणैक्यं ब्रूयात् तदसत् । उक्तं तत्पूर्वं न वा प्रकरणभेदादिति । तदपि त्वस्त्येव प्रकरणभिन्नत्वम् । तथा हि एकान्तभक्तस्य तत्स्वरूपैकनिष्ठत्वेन तत्स्वरूपपर्याद्दभूतधर्माणामनुपसंहारः । अनेकान्तभक्तस्य तु ब्रह्मत्वसामान्येन सर्वत्रैकज्ञानात् सर्वधर्मोपसंहारे बाधकाभावः । इत्थं च संघैकत्वेऽप्यान्तरनिष्ठाभेदस्य नाप्राप्तत्वादुभयोरुपासनाप्रकरणं भिद्यते । प्रकरणभेदाच्चोपसंहारानुपसंहारौ भेदेन द्रष्टव्यौ ॥ ८ ॥

नन्वेकान्तभक्तानां परिच्छिन्नाकारवद्रूपोपासकतया परमेश्वरोपासकत्वं न स्यात् । परिच्छिन्नरूपस्यार्थस्य दिग्देशकालानवच्छिन्नपरमेश्वरतो भिन्नत्वादिति चेत् तत्र ब्रूमः । व्याप्तेश्च समंजसमिति । सर्वतः पाणिपादं तदित्यादिश्रुतेः साकारस्यापि तस्य व्यापकत्वाभ्युपगमेऽग्निधर्मकब्रह्मवत्सामंजस्यान्नानुपपत्तिः सर्वरस इति श्रुत्या च भक्तानुग्रहविग्रहस्य भिन्नभिन्नरसप्रादुर्भावाय भिन्नभिन्नरूपेण प्राकट्येऽपि सर्वधर्म्युपसंहारेण व्यापकताया उपपन्नत्वात् ॥ ९ ॥

ननु सर्गलीलाविसर्गलीलादीनामीश्वरलीलात्वेन नित्यत्वात् सर्गलीलासम्बन्धिजीवानां विसर्गलीलासंबन्धित्वं न स्यात् । तथात्वाभ्युपगमे लीलाया अनित्यत्वप्रसक्तेरिति चेत् तत्राह × सर्वाभेदादन्यत्रेमे इति । लीलासम्बन्धिसर्वार्थानामीश्वरेण सहाभेदादन्यत्राग्रिमलीलायामपि इमे एव जीवाः संभवन्ति । जीवानामीश्वरांशत्वादीश्वरस्य चैकत्वाद् व्यापकत्वाच्च ॥ १० ॥

ननु लीलास्थितजीवानामीश्वराभिन्नत्वेन व्यापकत्वाभ्युपगमे साधकजीवानामपि पूर्णानन्दादिधर्मवत्त्वं स्यात् । ईश्वरधर्मस्य सर्वस्यापि तत्रौचित्यादिति चेत् तत्र ब्रूमः आनन्दादयः प्रधानस्यैवेश्वरस्य धर्माः स्युर्न तु जीवस्यापि । साधकजीवानामीश्वरादभेदो यावन्न स्फुरति तावत् पूर्णानन्दादीश्वरधर्माणां तत्राविर्भावाभावात् तत्र दुःखस्फूर्तेः । अभेदस्फूर्तौ तु जीवत्वव्यपायादीश्वरेणानतिरेकात् पूर्णानन्दादयो धर्मास्तत्राप्याविर्भवन्त्येव ॥ ११ ॥

ननु प्रधानस्येश्वरस्यानन्दमयत्वे प्रियशिरस्त्वादिधर्माणामपि प्रधानधर्म्मत्वाविशेषात् तेषामप्यत्रेश्वरे तदीश्वरतादात्म्यापन्ने मुक्तजीवे वेदोपसंहारः स्यादत आह प्रियशिरस्त्वाद्यप्राप्तिरीश्वरे मुक्तजीवे चेष्यते। ईश्वरस्य निर्भेदाखण्डैकरसानन्दत्वेन प्रतिपन्नत्वात्। भेदे हि सति प्रियमोदाद्युपचयापचयौ संभवतः। अन्तःकरणशुद्धेरपर्य्याप्तत्वे तत्तारतम्यानुरोधेनानन्दे प्रियत्वमोदत्वादयो विशेषा उपचयापचयभेदेन भासन्ते। यस्य त्वन्तःकरणशुद्धिः पर्य्याप्ताभूत् तस्य विशुद्धाभेदज्ञानिनः पूर्णानन्दरूपत्वात् तत्रैतेषां तारतम्यधर्म्माणामनवसरत्वान्न प्रियशिरस्त्वाद्युपसंहारप्राप्तिः संभवति॥ १२॥

ननु विष्णुशिवसूर्य्यादिषु सगुणब्रह्मसु परस्परविरुद्धगुणानां पूर्वोक्तरीत्यानुपसंहारे सर्वगुणत्वाभावात् तेषां सर्वेषामपीश्वरत्वं न स्याद्। अनीश्वरत्वाच्चानुपास्यत्वं प्रसज्येतेति चेत् तत्रोच्यते इतरे त्वर्थसामान्यात् इति। इतरे विरुद्धधर्मा विष्णुशिवसूर्य्यादयो ह्यर्थस्य ब्रह्मणः सामान्याद् धर्मिरूपेणोपसंहार्य्या नतु धर्मरूपेण। परस्मिन् तत्तद्धर्मानुपसंहारेण परस्परतो भेदेऽपि ब्रह्मणा सह सर्वेषामस्त्यभेद इति सर्वतत्तद्धर्म्मिसमुच्चयेनैकं ब्रह्मैव शुद्धमुपास्यं सिद्धं भवति। यथा पुरुषे श्रृङ्गपुच्छादीनां जीवविशेषधर्माणामनुपसंहारेऽपि पुरुषाणां पशूनां च जीवसामान्यादेकवर्गे उपसंहारः तथेहापि प्रतिपत्तव्यः॥ १३॥

आध्यानाय हि गुणोपसंहारः क्रियते तस्माद् यावता ध्यानसिद्धिस्तावतामेव गुणानामुपसंहारः कार्य्यः। अन्येषां तु प्रयोजनाभावान्नोपसंहारः। तेन शुद्धाखण्डैकरसानन्दमयस्वरूपमात्रेण ध्यानसिद्धेर्न मोदप्रमोदादिपक्षादीनामुपसंहारः॥ १४॥

पञ्चकोशविद्यायाम् आनन्द आत्मेत्यानन्देऽस्मिन् आत्मशब्दान्मोदप्रमोदादीनामानन्दरूपतया तेषामप्यात्मस्वरूपेणैवोपसंहारः कार्य्यो न तु पक्षपुच्छादिरूपेण नवोपचयापचयरूपेण नवाभेदेन॥ १५॥

ननु तत्रैव पञ्चकोशश्रुतौ तस्यैष एव शारीर आत्मेत्युक्तेरन्यस्य शारीराभिमानिनो जीवस्य तदानन्दमयं प्रत्यात्मत्वेनोपदेशात्। जीवात्मधर्मोऽयमानन्दमयः प्रतीयते नत्वात्मा तथाचात्मशब्दादित्युक्तिर्न साध्वीति चेदत्रोच्यते। आत्मगृहीतिरितरवदुत्तरात् इति। तस्यैष एव शरीर आत्मेति यदितरवदन्नमयादिष्वात्मग्रहणं तदुत्तरात् सर्वान्त्यादानन्दमयाद्धेतोरेव क्रियते। आनन्दमय एव हि शारीर आत्मा तस्यैव तु विज्ञानमयाद्यन्नमयपर्य्यन्तेष्वनुस्रव इष्यते। तस्य परमकाष्ठापन्नत्वेन तदतिरिक्तब्रह्मणोऽभावात्॥ १६॥

ननु पञ्चमतस्यैतस्यानन्दमयस्य व्यापकत्वेन सर्वत्रान्वयान्नवतु नामान्नमयादिष्वप्यनुस्रवः किन्तु तावता पूर्वेष्वन्नमयादिषु पृथक् पृथक् अतः शारीर आत्मा जीवः कथं प्रत्याख्यातः स्यादिति चेदुच्यते। स्यादवधारणादिति। एव को-

वेत्येवकारेण निर्धारणादानन्दमय एवायमन्नमयादिशरीराभिमान्यपि स्यान्न तु भिन्नो जीवः ॥ १७ ॥

ननु पञ्चकोशविद्यायामन्नमयादीनां पुरुषविधतामाख्याय तत्पुरुषविधता-मन्वयं पुरुषविध इति प्रतिज्ञायते। तथा चान्त्यस्यानन्दमयस्य पुरुषत्वे तस्यैव सर्वात्म्यात् कोयमन्यः पुरुषविधोऽवशिष्यते इति चेत् तत्र ब्रूमः । द्विविधो ह्यत्र पुरुषो विवक्षितः-बाह्यात्मा चान्तरात्मा च तत्र तैत्तिरीयके "तस्माद्वा एतस्मादादित्या-दाकाशादिमहाभूतसृष्टिमुक्त्वा तत ओषधीभ्योऽन्नमन्नात् पुरुषः । स वा एष पुरुषो-ऽन्नरसमय इत्यन्नरसमयत्वात् कार्य्यात्मा यः पुरुषः तस्यैव बाह्यात्मन इहेदंशब्द-नाख्यानात् तदन्तरपूर्वमानन्दमयादिलक्षणं बाह्यान्तरात्मत्वेनेष्यते । कार्य्यपुरुषा-पेक्षयैदमपूर्वं पुरुषलक्षणं प्रतिपत्तव्यम् ॥ १८ ॥

अथवाऽन्यथा व्याख्यास्यामः ॥ शरीरादतिरिक्तोऽन्तरात्माप्यत्र द्विविधः— जीवात्मा परमात्मा च । तथा च यत्र बृहदारण्यके आत्मेत्येवोपासीतेत्युपक्रम्य तस्य सर्वेभ्यः प्रियमुक्त्वा ईश्वरो हि तथा स्यादात्मानमेव प्रियमुपासीतेत्युक्तम् ॥ तत्रात्मपदेन जीवात्मनः परमात्मनो वोपासनं विधीयते इति संशये उच्यते । कार्य्याख्यानादपूर्वमिति । प्राणन्नेव प्राणो भवतीत्यादि पूर्वश्रुतौ जीवात्मनः सर्वे-न्द्रियकार्य्यैराख्यानादपूर्वं जीवभिन्नं ब्रह्मैवोपास्यं द्रष्टव्यम् ॥ ईश्वरो हीतीश्वर-पदस्वारस्यात् सर्वस्मादन्तरमिति अन्तरात्मापेक्षयाप्यन्तरात्मत्वेनाख्यानाच्च ॥

ननु ब्रह्मेदमुपास्यं शुद्धाद्वैतमेकरसं व्याख्यातम् । चक्षुःश्रोत्रहस्तपादा-दीनीन्द्रियाणि च परस्परविलक्षणानि भवन्तीति तेषां परमात्मविग्रहे सत्त्वाभ्यु-पगमे तस्यैकरसत्वं व्याहन्येत । अनभ्युपगमे तु तस्य सर्वेन्द्रियकार्य्यकर्तृत्वं न स्यात् इति चेत् तत्रोच्यते । समान एवं चाभेदादिति । चक्षुःश्रोत्रादीनां सत्त्वेऽप्येषां चक्षुरादीनां ब्रह्मत्वेन परस्परमभेदात् समानः स एकरस एवोपपद्यते । आनन्द-मयस्य तस्य स्वेच्छयाऽनेकविरुद्धाविरुद्धभावाभ्युपगमेऽपि तेषां भावानां ब्रह्मभिन्न-त्वाभावादेकरसत्वाव्याघातात् ॥ १९ ॥

अथ यत्र कार्य्यं जीवविशेषे ईश्वरावेशः, तस्येश्वराविष्टजीवविशेषस्योपास-नार्थं तस्मिन् जीवे सर्वेषामीश्वरधर्माणामुपसंहारः कार्य्यो नवेति जिज्ञासायां द्वै-विध्यं वक्तुं तावत् प्रथमं पक्षमाह संबन्धादेवमन्यत्रापि इति । अन्यत्रेश्वराविष्ट-जीवेऽपि एवमीश्वरसर्वधर्मोपसंहारेणेश्वरपदेनोपासनं कार्य्यम् । अयोगोलके वह्नेरिव तत्र जीवे परमात्मसंबन्धात् ॥ २० ॥

अथवा पक्षान्तरं द्रष्टव्यम् । न वाऽविशेषादिति । न वोपसंहारः कार्य्यः । तस्य जीवस्यापीश्वरेणाविशेषात् । ईश्वरावेशादेव तत्र सर्वेश्वरधर्मसत्त्वात् ॥ २१ ॥ दर्शयति च तत्रेश्वरः स्वत एव सर्वानात्मधर्मान् इति नोपसंहारोऽपेक्ष्यते । उपसंहारो हि तत्रानु-पलभ्यमानानां धर्माणां तत्र भावनम् । तत्र चोपलभ्यमाने सर्वेश्वरधर्मे नोपसंहारः

कर्तव्योभवति ॥ २२ ॥ ननु इतरधर्माणामनुपसंहारेऽपि द्युलोकव्याप्त्यादयो धर्मास्तत्र जीवेउपसंहर्त्तव्याः स्युरिति चेदुच्यते ॥ संभृतिद्युव्याप्त्यपि चात इति । अतः पूर्वोक्ता दविशेषादेव हेतोः सकलवीर्य्यसंभरणद्युव्याप्त्यादयोपि धर्मा नोपसंहार्य्याः ॥ २३ ॥ ननु सहस्रशीर्षा पुरुष–इत्यादिना पुरुषविद्या श्रूयते । ब्रह्मप्रपाठके च स वा एष पुरुषोऽन्नरसमय इत्युच्यते । पञ्चकोशविद्यायां चान्नमयादीनां पुरुषविधत्वमाख्यायते । तथा चान्नमयादीनां पुरुषविधत्वोपदेशात् पुरुषविद्योपात्तानां सहस्रशीर्षत्वादीनामत्रोपसंहारः स्यादत उच्यते । पुरुषविद्यायामिव चेतरेषामनाम्नानादिति । इतरेषामन्नमयादीनां भौतिकानां पुरुषविद्यायामिव साकारव्यापकाधिदैविकब्रह्मस्वरूपस्य सहस्रशीर्षादिलक्षणस्याम्नानं नास्तीत्यतस्तत्र सहस्रशीर्षत्वाद्युपसंहारो नास्ति ॥ २४ ॥

## भगवद्भक्ति माहात्म्यम् ॥ २ ॥

वेद्याद्यर्थभेदात् ॥ २५ ॥ हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम् ॥ २६ ॥ साम्पराये तर्त्तव्याभावात्तथा ह्यन्ये ॥२७॥ छन्दत उभयाविरोधात् ॥२८॥ गतेरर्थवत्वमुभयथाऽन्यथा हि विरोधः ॥२९॥ उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥३०॥ अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम् ॥३१॥ यावदधिकारमवस्थितिराधिकारिकाणाम् ॥३२॥ अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥३३॥ इयदामननात् ॥३४॥ अन्तरा भूतग्रामवत्स्वात्मनोन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् ॥ ३५ ॥ व्यतिहारो विशिंषन्ति हीतरवत् ॥३६॥ सैव हि सत्यादयः ॥३७॥ कामादीतरत्र तत्र चायतनादिभ्यः ॥३८॥ आदरादलोपः ॥ ३९ ॥ उपस्थितेऽतस्तद्वचनात् ॥ ४० ॥ तन्निर्द्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ४१ ॥ प्रदानवदेव तदुक्तम् ॥४२॥ लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥४३॥ पूर्वविकल्पः प्रकरणात्स्यात्क्रियामानसवत् ॥४४॥ अतिदेशाच्च ॥४५॥ विद्यैव तु निर्धारणात् दर्शनाच्च ॥ ४६ ॥ श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४७ ॥ अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्-

दृष्टश्च तदुक्तम् ॥४८॥ न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥४९॥ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥५०॥ एक आत्मनः शरीरे भावात् ॥५१॥ व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् ॥ ५२ ॥ अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५३ ॥ मन्त्रादिवद्वाऽविरोधः ॥ ५४ ॥ भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥५५॥ नाना शब्दादिभेदात् ॥५६॥ विकल्पोऽविशिष्टफलत्वात् ॥ ५७ ॥

उद्गीथविद्यायां वागादिप्राणेषूद्गानेऽसुरकृतः पापवेधो देवपराजयश्चाभूत् तत्र हेतुमाह वेधाद्यर्थभेदादिति । अर्थस्यैश्वरलक्षणस्य भेदात् संबन्धाभावादेषु प्राणेषु वेधाद्यभूत् । आसन्ये तु प्राणे भगवत्संबन्धात् स दोषो नाभूदिति बोध्यम् ॥ २५ ॥

ईश्वरसंबन्धाभावे गुणहानिश्च भवतीत्याह हानौ तूपायनशब्दशेषत्वादिति जीवस्य हानावीश्वरतो विभागे ये जीवनिष्ठा आनन्दांशैश्वर्य्यादयो धर्मास्तिरोहितास्ते भगवत्संबन्धे सति पुनराविर्भवन्ति । परमं साम्यमुपैतीति श्रुतेः । नतु सर्वथा भगवद्धर्मवत्त्वं किन्तु यावन्तस्तिरोहितास्तावन्त एवाविर्भवन्ति नान्ये धर्माः, उपायनशब्देन कथनात् । उपायनं प्राप्तिः । सा च स्वधर्माणामेव नान्येषाम् । नन्वानन्दादिभिः साम्ये ब्रह्माभेद एव स्यादिति चेन्नेत्याह कुशाच्छन्दःस्तुत्युपगानवत् । कुशा औदुम्बर्य्यः समिधः । तत्संबन्धिच्छन्दःस्तुत्युपगानमभि त्वा शूर नोनुम इत्येतस्यामृचि अच एवोपसंहृत्य भकारेण क्रियते । नैतावता भकाराणामृगात्मकत्वं संभवति तथात्रापि बोध्यम् । ननु तत्त्वमस्यादिवाक्यैरस्तु जीवे भगवद्भेद एवेति चेत् तदभेदबोधनश्रुतितात्पर्यं पूर्वमुक्तमिति नैतच्छ्रुत्या तदभेदः कल्प्यः ॥ २६ ॥

सम्यक्परस्य पुरुषोत्तमस्यायो ज्ञानं येन स संपरायो भगवद्भक्तिमार्गः । तस्मिन् प्राप्तव्ये तर्तव्यस्य पापस्याभावान्न भक्त्या पापनाशः साध्यते । भक्तिमार्गे प्रवेशात् पूर्वमेव पापानां नष्टत्वात् । ननु सर्वे पाप्मानं तरन्तीति श्रुत्या भक्त्या पापनाशः कुतो नाङ्गीक्रियते तत्राह तथा ह्यन्ये इति । तस्याः श्रुतेर्ज्ञानमार्गीयविषयत्वात् । तथा हि भक्तिमार्गीयेभ्योऽन्ये पापवन्तो ज्ञानान्तरं पाप्मानं तरन्तीत्यर्थः ॥ २७ ॥

ननु तर्हि भरतस्य भक्तस्य भक्त्युत्तरं मृगदेहारम्भकपापस्थित्यसंभव इत्याशङ्क्याह—छन्दत उभयाविरोधादिति ॥ भक्तिमार्गे विशिष्टफलदानायेश्वरेच्छातो भक्तेरन्तरमपि पापनाशो भवतीति मन्तव्यम् ॥ तथा च नराणां क्षीणपापानामिति पापनाशतो भक्त्युदयबोधकवाक्यस्य मृगदेहारम्भकभरतप्रारब्धकर्मबोधकवाक्यस्य चेत्युभयोरेवाविरोधो भवति ॥ २८ ॥

मर्य्यादापुष्टिभेदेनोभयथापि गनेर्ज्ञानस्य फलजनकत्वं मन्तव्यम् अन्यथा तु "ज्ञानेनैव हि कैवल्यमिति, यमेवैष वृणुते तेन लभ्यः" इति वाक्ययोर्विरोधः स्यात् ॥ २९ ॥

मुमुक्षोरपेक्षया रहस्यभजनकर्तव्योपपत्तिर्मन्तव्यः। भगवल्लक्षणपुरुषार्थस्य स्वाधीनत्वेनोपलब्धेः। लोके यथा स्वाधीनपतिका स्वामिनं स्वाधीनं मनुते तद्वत् ॥ ३० ॥

भगवतो धारणरसनभजनध्यानादीनां समुदितानामेव सतां फलसाधकत्वमिति नास्ति नियमः। सर्वासामेव धारणादिभक्तीनां प्रत्येकस्यापि फलजनने विरोधाभावात्। एतच्च "चिन्तयँश्चेतसा कृष्णमिति श्रुतेः, केवलेन हि भावेनेति स्मृतेश्च गम्यते ॥ ३१ ॥

कार्य्यविशेषसाधनार्थं क्वचिज्जीवे भगवता ये स्वकीयधर्माः स्थापितास्ते आधिकारिकाः स्युः। तेषां यावत्कार्य्याधिकारमेवावस्थानं भवति। कार्य्ये संपन्ने तान् धर्मान् स्वस्मिन्नाकर्षति भगवान् न तु तज्जीवस्य जीवनपर्य्यन्तं स्थापयति ॥ ३२ ॥

त्रिविधोऽयमात्माभवति—जीवो अक्षरपरश्चेति। तत्र परस्य पुरुषोत्तमस्य प्राप्तिरेव मुख्या मुक्तिः॥ सा च भक्तानामेवाक्षरप्राप्त्यनन्तरं परप्राप्त्या संपद्यते। तत्राक्षरज्ञानस्य परम्परासाधनत्वम्। अक्षरज्ञानेन ब्रह्मभावोत्तरं भगवद्भावात्। अथ अक्षरज्ञानिनां तु परमात्मसंबन्धाभावादक्षरप्राप्तिरूपा सामान्यमुक्तिरेवोपपद्यते। तत्राक्षरज्ञानस्य साक्षात्साधनत्वम्। एवं मोक्षद्वयेऽप्यक्षरज्ञानानां सामान्यमुक्तिपरभावमुक्तिभ्यां साधनत्वमुपपद्यते। नन्वेवमक्षरज्ञानवतां क्वचिदक्षरे लयात् सामान्यमुक्तिः क्वचित्पुनः परभक्तिभावोदयान्मुख्या मुक्तिरिति द्वैविध्यं कुतः संभवतीति चेद् औपसदवद्द्रष्टव्यम् उपसदाख्ये कर्मणि यजमानः सर्वेषु ऋत्विक्षु यं कामयेत यक्षयशसमृच्छेत् तं प्रथमं तानूनपत्राख्यमाज्यं स्पर्शयेत्। तत्र यथा यजमानेच्छा नियामिका तथाऽत्र भगवदिच्छा हेतुरिति वाच्यम्। ननु भगवत्संबन्धिश्रवणादीनां यथा भगवत्प्रापकत्वं तथाऽक्षरज्ञानस्य कुतो नेत्यत्राह तदुक्तमिति। "यदक्षरं वेदविदो वदन्तीत्यारभ्य स याति परमां गतिमित्यन्तेनाक्षरज्ञानेनाक्षरस्यैव प्राप्तिर्नतु परस्य इति गीतायामुक्तम् ॥ ३३ ॥

अथ तैत्तिरीयकानन्दमीमांसायां मानुषानन्दमारभ्यैकादश्यामुत्तरकक्षायां ब्रह्मानन्दः परकाष्ठायामाख्यातः॥ सोऽयं ब्रह्मानन्दोऽक्षरानन्द एव प्रतिपत्तव्यः इयदामननात्। उत्तरोत्तरवृद्धिक्रमेण परिच्छिद्याख्यानात्। आनन्दानुभवयोग्यलयपूर्वदशापेक्षयैवानन्दतारतम्यस्य वक्तुं शक्यतया तत्राक्षरानन्दस्यैव चरमसीमापन्नत्वात्। निर्धर्मके तु परब्रह्मणि लये भोक्तुरभावादानन्दानुभवासंवात् गणनासाधकसंख्याद्यभावाच्च नानन्दतारतम्यं संभवति। तस्माज्ज्ञानिनामक्षरानुगामिनाम पेक्षि-

कात्यन्तिकानन्दप्राप्तावपि परिच्छेदसत्त्वादल्पत्वमेव । भक्तानां तु पूर्णपुरुषोत्तमानुगामिनामगणितानन्तानन्दावाप्तिरिति बोध्यम् ॥ ३४ ॥

भगवता भक्तिमार्गे स्वीयत्वेनाङ्गीकृत आत्मा स्वात्मा स्वात्मत्वेन भगवज्ज्ञानं भजनेऽन्तरायमिति कृत्वा भगवान्नोत्पादयति तादृशभक्तविग्रहस्यालौकिकत्वात् तेषु यथाभूतग्रामो लौकिको नास्ति तद्वदिदं ज्ञानमपि तेषु नास्ति ॥ ३५ ॥

ननु चान्यथा भगवदभेदज्ञानस्य भजनान्तरायत्वाभ्युपगमे एकादशस्कन्धे भक्तेषूद्धवादिष्वभेदज्ञानेनोपदेशानुपपत्तिरिति चेन्न । उपदेशान्तरवत् । यथा गायत्र्युपदेशेन संस्कृतं ब्राह्मणशरीरं वैदिककर्मोपयोगि भवति तथेदृशज्ञानोपदेशसंस्कृतो भक्तो भक्तिरसानुभवयोग्यो भवतीत्येतदर्थमुपदेशो नत्वभेदज्ञानार्थम् ॥ ३६ ॥

अहं कृष्णः कृष्णोऽहमित्येवं यद्विशिंषन्ति भक्ताः सव्यतिहारः सोऽपीतरवज्ज्ञेयः । विप्रयोगोद्रेकेऽश्रुप्रलापादिवदेवायं व्यतिहारोपि द्रष्टव्यः नैतावताऽभेदज्ञानस्य भक्तिफलत्वम् ॥ ३७ ॥

सत्यशमदमादयोपि भक्तानां सा भक्तिरेव हि भवति । सत्यादीनां ज्ञानमार्गीयसाधनानां प्रयत्नविशेषानपेक्षं स्वत एव भक्तेषूत्पत्तेः ॥ ३८ ॥

विहितभक्तेरितरत्र तु कामाद्यौपाधिकभगवद्भावे कामाद्येव तन्मुक्तिसाधनम् । तत्र च गृहादिभ्योपि मुक्तिसिद्धिः । भगवत्सेवासाधनत्वात् ॥ ३९ ॥

वर्णाश्रमधर्माणां भगवद्धर्माणां च युगपत्करणे प्रसक्ते भगवद्धर्मेष्वादरश्रवणात् तेषां कर्मभिरलोपः ॥ ४० ॥

तथा च कर्मवद्धर्मयोर्युगपत्करणे उपस्थितेऽत आदरादलोपवचनाद् भगवद्धर्म एव कार्य्यः ॥ ४१ ॥

अस्माकं कर्मकरणेऽकरणे वा भगवदिच्छास्ति नास्ति वेति निर्धारणानियम आधुनिकानाम् । अतस्तैर्निष्कामतया तत्कर्तव्यमेव । भगवदिच्छाविषयकज्ञानवतोऽम्बरीषोद्धवयुधिष्ठिरादेस्तु जीवकृतकर्मफलात् पृथगीश्वरकृतकर्मफलं सन्मार्गरक्षालोकसंग्रहादिरूपं भवति । पूर्वोक्तस्य निष्कामकर्तुस्तु स्वकर्मजफलोत्पत्तिप्रतिबन्धाभावः फलम् ॥ ४२ ॥

तस्मात्त्वमुद्धवोत्सृज्येत्यनेनोद्धवं प्रति भगवता कृतः सर्वात्मभावोपदेशस्तु प्रकर्षेण कृपावशाद्दानवदेवासीत् । नतु साधनसाध्यासः । तदुक्तं श्रुत्या । नायमात्मा प्रवचनेन लभ्य इति ॥ ४३ ॥

यमेवैष वृणुते तेन लभ्य इति श्रुत्या भगवत्कर्तृकं भक्तवरणं प्रसिद्धम्। तस्य लिङ्गं सर्वात्मभावः। तस्य भूयस्त्वात् सर्वतोऽधिकत्वाद्धेतास्तद्धि वरणं कालकर्मादिभ्यो वलीयास्ति। यदि भगवान् वरीतुमिच्छति तदास्य भक्तस्य कालदुरदृष्टादयो न प्रतिबन्धकाः संभवन्ति भगवदिच्छायाः सर्वतो वलवत्तरत्वात्। ननु मार्गीयज्ञानेन प्रतिवन्धः स्यादिति चेत्—तदप्युक्तमन्तराभूतग्रामवदिति सूत्रे॥ ४४॥

भक्तिमार्गफलं सर्वात्मभावः। ज्ञानमार्गफलमात्मज्ञानम्। तयाश्च सर्वात्मभावस्य वलीयस्त्वे हेतुर्भूयस्त्वं तच्च छान्दोग्ये नारदसनत्कुमारसंवादे नोक्तमिति तत्र पूर्वपक्षः क्रियते सूत्रद्वयेन। पूर्वविकल्पः प्रकरणात् स्यादिति। ताण्ड्योपनिषदि षष्ठाध्याये श्वेतकेतूपाख्याने नात्मज्ञानमुक्तम्। ततः सप्तमेऽध्याये नारदोपाख्याने यदिदं भूम्नो निरूपणं तदपि पूर्वाध्यायोक्तात्मज्ञानस्यैव विकल्पनं स्यात्। उभयत्रात्मन एव प्रकरणात्। यथा क्रिया वाह्यपूजा मानसं कर्मान्तरपूजा। तयोर्भेदेऽपि प्रकरणात् पूजात्वाविशेषः। तथैतयोः प्रकारभेदेऽपि प्रकरणात् ज्ञानत्वाविशेषः स्यात्॥ ४५॥

नामैवैतन्नामोपास्स्वेत्यादिना तत्रैव नामब्रह्मातिदेशाच्चायं ज्ञानप्रकारविशेष एव स्यान्न तु भगवद्भावस्य भूयस्त्वं तत्रोक्तं सिद्धं भवतीति प्राप्ते॥ ४६॥

सिद्धान्तमाह विद्यैव तु निर्धारणात् इति। भूमैव सुखं भूमा त्वेव विजिज्ञासितव्य इत्यानन्दात्मकपुरुषोत्तमस्यैव जिज्ञास्यत्वेन निर्धारणादिह विद्यैव निरूप्यते। विद्या हि सर्वात्मभावो न त्वात्मज्ञानम्। तस्मात् सर्वात्मभावस्यैव भूयस्त्वम्॥ ४७॥

सर्वात्मभाववतां व्रजभक्तानां भगवत्स्पर्शादिना सर्विस्मृतेर्दर्शनाच्च। चित्तं सुखेन भवतापहृतं गृहेष्वित्यादिवचनात्। 'तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मनः प्राणा"—इति श्रुतिदर्शनाच्च सर्वात्मभाव एव तत्रोक्तो गम्यते॥ ४८॥

ननु तरति शोकमात्मविदित्युपक्रमाज्ज्ञानमेवात्र प्रतिपाद्यं न सर्वात्मभाव इति चेत् तत्र ब्रूमः। श्रुत्यादिवलीयस्त्वाच्च न वाधेति। उपक्रमवाक्यानुरोधाज्ज्ञानविषयता प्राप्नोति। श्रुतिलिङ्गाभ्यां तु सर्वात्मभावः सिध्यति॥ तत्र च श्रुतिलिङ्गवाक्यप्रकरणेति न्यायाद्वाक्यापेक्षया श्रुतिलिङ्गयोर्वलीयस्त्वात् सर्वात्मभावलिङ्गभूयस्त्वस्य वाधो नास्ति इति वोध्यम्॥ ४९॥

नन्वेवमपि तत्र श्रुतौ सर्वात्मभावः प्रतिपाद्यो नास्ति भूमा कुत्र प्रतिष्ठित इति प्रश्ने स्वे महिम्नि प्रतिष्ठित इति ब्रह्मणः स्वाधारत्वाख्यानादिति चेत् तत्रोच्यते॥ अनुबन्धादिभ्य इति। स वा एवं पश्यन्नित्यनेनतच्छब्दस्य पूर्वपरामर्शित्वात् भूमाधिकरणसर्वात्मभावादिभ्यो हेतुभ्यः सर्वात्मभाव एवात्र प्रतिपाद्यो न ब्रह्मणः

स्वाधारत्वम् । नन्वात्मज्ञानवत् सर्वात्मभावस्यापि मुक्तिरेव फलमित्युभयोर्वैशेष्याभाव इति चेन्न । सर्वात्मभावबद्धकप्रज्ञातो भिन्नाया मुमुक्षुप्रज्ञायाः भगवल्लीलासाधकत्वमेव न तु स्वकामनासाधकत्वम् । अत एव नास्या मुक्तिसाधकत्वम् ॥ दृष्टश्च व्रजभक्तादौ स्वरूपानुभावातिरिक्तफलाभावः । तदुक्तं भगवता—अहं भक्तपराधीन इत्यारभ्य, वशे कुर्वन्ति मां भक्त्या इत्यादिना ॥ ५० ॥

ननु सर्वात्मभावनिरूपकनारदसनत्कुमारसंवादप्रपाठके तस्य सर्वेषु लोकेषु कामचारो भवतीत्युक्त्या सर्वात्मभावबद्धकस्याप्यन्यकामना गम्यते इति चेत् तत्रोच्यते—नेति । नात्र कामचारोक्तिर्भक्तस्य नानाकामनासद्भावं प्रतिपादयति । सामान्यादप्युपलब्धेः तत्समानधर्मसंबन्धादपि श्रुतौ तत्प्रयोगो बहुश उपलभ्यते । प्रकृतेऽपि भगवत्संबन्धिसर्वसुखान्येव लोकास्तेषु कामचारत्वाभिप्रायेण तथोक्तिः । नन्वस्तु प्रसिद्धेषु लोकेष्वेव सर्वेषु कामचारः किमिति भगवत्सुखानां लोकत्वमिह कल्प्यते इति चेत् तत्र ब्रूमः । मृत्युवन्नहि लोकापत्तिरिति । न पश्यो मृत्युं पश्यतीति तादृशभाववतो यथा मृत्युनिषेधः क्रियते तथा भगवत्स्वरूपातिरिक्तलोकान्तरसंबन्धोऽपि संभवतीति भाव्यम् ॥ ५१ ॥

तत्र हेत्वन्तरमुच्यते—परेण च शब्दस्य ताद्विध्यमिति ॥ शब्दस्य, आत्मन एवेदं सर्वमिति श्रुतिवाक्यस्य परेण, "सर्वमाप्नोति सर्वशः"—इति वाक्येन ताद्विध्यमेकरूपत्वमस्तीत्यतो न लोकान्तरसंबन्धो वक्तुं शक्यः । नन्वात्मन एवेदमित्युक्ते पुनः सर्वमाप्नोतीति किमर्थमुच्यते तत्राह—भूयस्त्वात्त्वनुबन्ध इति । हेतूनां बाहुल्ये दार्ढ्यं भवतीति कृत्वा पुनरनुबन्धो द्रष्टव्यः ॥ ५२ ॥

अत एवैके शाखिन आत्मनो भगवतो भक्तशरीरे आविर्भावात् तेन सह कामोपभोगं श्रावयन्ति—"सोऽश्नुते सर्वान् कामानिति श्रुत्या ॥ ५३ ॥

भगवता कृतस्य वरणस्याभावेन भगवद्भावस्याभावात्तु ज्ञानिनां हृदये परमव्योमाविर्भावस्य व्यतिरेको द्रष्टव्यः । ननु भगवतो ज्ञानविषयत्ववदाविर्भावोऽप्यस्तु । तत्राह । न तूपलब्धिवत् । उपलब्धिर्ज्ञानं तद्यथा साधनेन साध्यते न तथा भगवदाविर्भावः साध्यते । तस्य भगवत्कृतवरणं विना केनाप्युपायेनाशक्यत्वात् । "यमेवैष वृणुते तेन लभ्य इति श्रुतेः ॥ ५४ ॥

तत्र निदर्शनमुच्यते प्रतिवेदं नियतानां हौत्रौद्गात्राद्यकर्मणां करणार्थं यजमानवृता ऋत्विजो यथा सर्वशाखीयकर्मकरणसमर्था अपि कर्मविशेषावबद्धत्वादन्यत्राधिकाराभावान्न सर्वशाखासु प्रभवन्ति तथात्र भगवद्वरणाभावाज्ज्ञानिनां हृदये भगवद्भावाविर्भावो नास्ति ॥ ५५ ॥

ननु केचित्कर्मज्ञाननिष्ठा अपि भक्तिमार्गे भगवता व्रियन्त इति ऋत्विग्दृष्टान्तवैषम्यमत आह—मन्त्रादिवद्वाऽविरोध इति । यथैक एव कश्चिन्मन्त्रो शाखाञ्ञा-

वशादनेककर्मसु विनियुज्यते, कश्चिद् द्वयोः, कश्चिदेकत्रैव। तथेह भगवदिच्छावशाज्जीवोऽपि कश्चित्कर्मनिष्ठां प्राप्य वरणेन भक्तिनिष्ठां प्राप्नोति, कश्चिज्ज्ञाननिष्ठां प्राप्य। कश्चित्तु प्रथमत एव भक्तौ व्रियत इत्यविरोधः ॥ ५६ ॥

ननु भक्तिफलस्य सर्वात्मभावस्य लिङ्गभूयस्त्वादिति सूत्रे सर्वोत्कृष्टत्वमुक्तं तन्न युक्तम् ॥ श्यामा श्यामा जगति सकले इत्यादिषु लौकिकनायकस्यापि सर्वत्रनायिकाभानदर्शनात् तस्य लौकिकरसतुल्यत्वादिति चेत् तत्रोच्यते। भूम्नः क्रतुवज्ज्यायस्त्वमिति। यथा दर्शपूर्णमासादिक्रतुषु दोहनाधिश्रयणादिकर्मणां लौकिककर्मतुल्यत्वेपि न लौकिकत्वमलौकिकप्रमाणकगम्यत्वात् तथैवेह भूम्नः सर्वात्मभावस्य सर्वोत्कृष्टत्वं नेयम्। तथा हि—आत्मनः प्राणा इत्यादिश्रुतिर्भक्तानां सर्वं भगवत एवेति दर्शयति। भक्त्यादीनां लौकिकक्रियासाम्येपि भगवद्विषयत्वात् सर्वोत्कृष्टत्वं भाव्यम् ॥ ५७ ॥

॥ इति भगवद्भक्तिफलभूतसर्वात्मभावस्वरूपविचारः ॥

॥ इति भगवद्भक्तिमाहात्म्याधिकरणम् ॥

## (३) अथोपासनानिर्णयः ॥

**काम्यास्तु यथा कामं समुच्चीयेरन्नवा पूर्वहेत्वभावात् ॥ ५८ ॥ अङ्गेषु यथाश्रयभावः ॥ ५९ ॥ शिष्टेश्च ॥ ६० ॥ समाहारात् ॥ ६१ ॥ गुणसाधारण्यश्रुतेश्च ॥ ६२ ॥ न वा तत्सहभावोऽश्रुतेः ॥ ६३ ॥ दर्शनाच्च ॥ ६४ ॥**

ईश्वरावताराणां व्यक्तिचरित्रादिभेदादुपासनापि तेषां भेदेनैव कार्य्या न तु सर्वावतारविशिष्टस्यैकस्य ब्रह्मणः। तत्तत्स्वरूपबोधकशब्दानां तदाकाराणां चरित्राणां च भेदादैकरूप्येणोपासनाया अयुक्तत्वात् ॥ ५८ ॥

पार्थक्येन कर्तव्यानां चोपासनानां विकल्पो न त्वग्निहोत्रदर्शपूर्णमासादिवत् समुच्चयः। प्रत्येकावतारोपासनानां भिन्नानामपि सर्वेषामविशिष्टफलत्वात्। अन्यतमोपासनेन फलसिद्धौ समुच्चयवैयर्थ्यात् ॥ ५९ ॥

यास्तु काम्योपासना भिन्नफलास्ता यथा कामं समुच्चीयेरन्। फलगतविशेषसत्त्वाद्विकल्पानौचित्यात्। अथवा काम्यास्वपि यत्रैकस्या एवानेकफलसाधकत्वमुपपद्यते तत्र तयैकयैव कार्य्यसिद्धौ भिन्नफलत्वरूपपूर्वोक्तहेत्वभावात् समुच्चयो नास्ति ॥ ६० ॥

एकफलसाधकानामुपासनां भिन्नभिन्नस्थलेष्वाम्नातानां भिन्नाङ्गयुक्तानामङ्गेषु यथाश्रयभावो नेयः। यदङ्गं यत्राम्नातं तत्र तदङ्गविशिष्टं देवोपासनं कार्य्यम्। न त्वन्यत्राम्नातानामन्यत्रोपसंहारः कार्य्यः॥ ६१॥

शिष्टेः। तदङ्गानां तत्रैव शासनादन्यत्रोपनयने प्रमाणाभावात्॥ ६२॥

ज्ञानमार्गे तु सर्वावतारधर्माणामेकस्मिन् ब्रह्मण्येव समाहारात् सर्वधर्मविशिष्टैकब्रह्मोपासनं क्रियते॥ ६३॥

ऐश्वर्य्यवीर्य्यादिगुणानां सर्वावतारेषु साधारण्येन श्रवणाच्चैकस्मिन्नवतारे सर्वावतारधर्मोपसंहारेणोपासनमयुक्तम्॥ ६४॥

अथवा नैतद्युक्तम्। तेषां रूपाणां नियततया तत्सहभावश्रवणाभावात्॥ ६५॥

दर्शनाच्च। दर्शनं ह्युपासनस्य फलम् तच्च स्वधर्मविशिष्टैकावतारस्यैव संभवति नतु सर्वावतारधर्मविशिष्टस्य। तस्माद् भक्तिमार्गीयस्य स्वधर्मविशिष्टैकावतारोपासनमेव युक्तमिति सिद्धम्॥ ६६॥

॥ इति प्रातिस्विकधर्मविचारपादस्तृतीयः वल्लभीयानाम्॥ ३॥

( प्रातिस्विक धर्मपादः—मुख्यधर्मपादः )





## ❋ शुद्धा-शुद्ध पत्र ❋

| पृष्ठे | पङ्क्तौ | अशुद्ध पाठाः | शुद्धपाठः |
|---|---|---|---|
| २ | ७ | दुपथते | दुपपद्यते |
| २ | २६ | यथा | पथा |
| २ | २७ | मेषु | मेष |
| २ | ३२ | क्षीयस्त्वे | क्षीयस्वे |
| २ | ३४ | मेषमन्नत्वं | मेषामन्नत्वं |
| ३ | ३० | भूयसीरद्भिः | भूयसीभिरद्भिः |
| ४ | ६ | संहारदा | संहाराद् |
| ४ | ३५ | प्रज्ञान्येति | प्रज्ञा-न्चेति |
| ५ | १ | सपद्यते | संपद्यते |
| ५ | १० | निवर्त्ततन्ते | निवर्त्तन्ते |
| ५ | १४ | आस्मिक | आकस्मिक |
| ५ | २३ | श्रुत | श्रुतवृत्त |
| ५ | २६ | प्रपद्यत्ते | प्रतिपद्यन्ते |
| ५ | २६ | चावरो हन्ति: | चावरोहन्ति |
| ६ | २४ | सव | सर्व |
| ६ | २६ | ॥ ६ ॥ | ॥ १ ॥ |
| ७ | २३ | कर्मणा | कर्नणां |
| ७ | २७ | कर्मणा | कर्मणां |
| ८ | ४ | "अण्डजं | ननु"अण्डजं |
| ८ | ७ | विचक्षणात् | विवक्षणात् |
| ८ | २५ | ॥ ६ ॥ | ॥ १ ॥ |
| ८ | २८ | उपतिष्ठन्ते | ऽवतिष्ठन्ते |
| ९ | ६ | कर्म भोगा | कर्मफलभोगा |
| ९ | ३० | मित्यर्द्ध | मित्यर्धं |
| १० | ६ | भावानुपष्टम्भक | भावानुमुपष्टम्भक |

| पृष्ठे | पङ्क्तौ | अशुद्ध पाठः | शुद्ध पाठः |
|---|---|---|---|
| ११ | १३ | कामं | कामं कामं |
| ११ | १८ | पश्याम: | पश्याम: |
| ११ | २५ | तस्मा माया | तस्मान्माया |
| १३ | २५ | स्वनं | स्वप्नं |
| २० | १७ | ऽनिलयते | ऽनिलयने |
| २० | २४ | तस्मै | स्तस्मै |
| २० | ३१ | कर्मणा | कर्मणां |
| २१ | २८ | निविशेषत्वं | निर्विशेषत्वं |
| २२ | २ | योगा योगयाः | योगायोगयोः |
| २२ | २ | सर्वत्रा विशेषण | सर्वत्राविशेषेण |
| २२ | १८ | नामरूपयो निर्वहिता | नामरूपयोर्निर्वहिता |
| २२ | २१ | निर्विशेषं | निर्विशेषं |
| २२ | २२ | कस्मात्सर्वं | कस्मात्सर्वं |
| २२ | २८ | मानोगु | मानोङ्कु |
| २२ | ३१ | इत्यवै थ्या | इत्यवैयर्थ्या |
| २२ | ३५ | वचो | वाचो |
| २३ | १ | मश्नुते | मश्नुते |
| २३ | ६ | अन्तर्भावात् | अन्तर्भावाद् |
| २३ | १० | यथा | तथा |
| २३ | १६ | विपरीतलिङ्ग | विपरीतलिङ्गं |
| २३ | १८ | निर्विशेषैकानको | निर्विशेषैकानन्तं |
| २३ | १६ | ब्रवाति | ब्रवीति |
| २४ | २ | तदेव | तद्देव |
| २४ | ११ | ब्रह्मणोस्वि | ब्रह्मणोऽपि |
| २४ | १२ | ज्येत् | ज्येत |
| २४ | १७ | तर्हि | तर्हि |
| २४ | १६ | यतद | यप्तव |

| पृष्ठे | पङ्क्तौ | अशुद्ध पाठः | शुद्ध पाठः |
|---|---|---|---|
| २४ | २१ | वृश्म | वृश्य |
| २४ | २२ | प्रपश्य | पश्यति निष्कलं ध्यायमान इति च श्रुतेः॥ योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् इति |
| २४ | २३ | न्तोति | ति |
| २४ | २१ | ब्रह्मव | ब्रह्मैव |
| २४ | ३० | | इति परिच्छेदप्रतिषेधाद-नन्तत्वाधिकरणं वा शङ्क-रमतेन॥ |
| २५ | १ | सर्वदाषा | सर्वदोषाः |
| २५ | ७ | सूर्य्यकादिवत् | अत एव चोपमासूर्य्य-कादिवत् |
| २५ | ७ | अम्बुवद्गृहणात्तु | अम्बुवद्ग्रहणात्तु |
| २५ | १६ | प्रत्याह | प्रत्याह। |
| २५ | १८ | विमृत्युविशो– | विमृत्युर्विशो |
| २६ | ८ | नाम रूप | नामरूप |
| २६ | १० | उभय लिङ्ग' | उभयलिङ्ग' ब्रह्म |
| २७ | १ | दशनाश्च | दर्शनाच्च |
| २७ | ३ | रूपविशेषान् | अरूपविशेषान् |
| २७ | ४ | तेषामेव | तेषामेष |
| २७ | २४ | तद्वैतत् | तद्वैतत् |
| २९ | ११ | धार्म्मि व्यप देश | धर्म्मिवद् व्यपदेश |
| २९ | १८ | माररम्भण | मारम्भण |
| २९ | २० | ब्रह्मणे | ब्रह्मणा |
| २९ | २७ | मिंश्रयो | मिश्रयो |
| ३० | १ | अधिक | अधिकं |
| ३० | १ | २।१।१२। | २।१।२२। |

| पृष्ठे | पङ्क्तौ | अशुद्ध पाठः | शुद्ध पाठः |
|---|---|---|---|
| ३० | १ | पूर्वोक्ति | पूर्वोक्त |
| ३० | ५ | ज्ञीर्य्यन्त | ज्ञीर्य्यत |
| ३० | २६ | प्रश्ने | प्राश्ने |
| ३१ | २८ | भेदस्योपपत्तश्च | भेदस्योपपत्तेश्च |
| ३१ | २६ | तिरोभावे | तिरोभावे सति |
| ३२ | १८ | परिच्छन्नत्वं | परिच्छिन्नत्वं |
| ३२ | २२ | दुःखमेवापियनंत | दुःखमेवापियन्ति |
| ३२ | २७ | ब्रह्मपादो | ब्रह्म पादो |
| ३३ | १० | व्यातत्व | व्याप्यत्व |
| ३३ | ११ | सर्वगतं | सर्वगतम् । |
| ३३ | २२ | उपपत्तेः | उपपत्तेः । |
| ३३ | २६ | प्रवानन्दयति | प्रधानन्दयाति |
| ३३ | ३० | फलयोग— | फलभोग– |
| ३४ | ६ | श्वेतमालभेद् | श्वेतमालभेत |
| ३५ | १० | शुत्तकर्मप्रकारः | शुद्धकर्मप्रकाराः |
| ३५ | १२ | विद्यालक्षणं प्रकरण– | विद्यालक्षणप्रकरण– |
| ३५ | १६ | वासनाराधना | वासना भावनाराधना |
| ३६ | ८ | छान्दोगा | छान्दोगा |
| ३६ | ९ | पञ्च संख्य | पञ्चसंख्य |
| ३६ | ११ | छन्दग | छान्दोग्ये |
| ३६ | १३ | श्रत्रमनांसि | श्रोत्रमनांसि |
| ३६ | १५ | वैषम्या | वैषम्ये |
| ३६ | २५ | शि। व्रताद्य पेक्षणा | शिरोव्रताद्यपेक्षणा |
| ३६ | २८ | व्रतान्तरणु पय स्य | व्रतान्तराण्युपन्यस्य |
| ३६ | २९ | शिराव्रत | शिरोव्रत |
| ३६ | ३१ | रानानुजादीनाम् | रामानुजादीनाम् |

| पृष्ठे | पङ्क्तौ | अशुद्ध पाठः | शुद्ध पाठः |
| --- | --- | --- | --- |
| ३६ | ३४ | कारश्च | काराश्च |
| ३७ | ४ | विशेषकारणं | विशेषकाणां |
| ३७ | ६ | विद्यकत्वम् | विद्यैकत्वम् |
| ३७ | ७ | वेद्यकत्वापदेशात् | वेद्यैकत्वोपदेशात् |
| ३७ | २३ | कनीयसा | कानीयसा |
| ३८ | ११ | एकविद्यं | ऐकविद्यं |
| ३८ | १४ | रूपान्यथात्वं | रूपान्यथात्वं विद्यान्यथात्वं |
| ३८ | १५ | नादसुरे | नादसुर |
| ३८ | २१ | मत्रान्याय्यम् | मत्र न्याय्यम् |
| ३८ | २४ | नुरोधावयवे | नुरोधादुद्गीथावयवे |
| ३८ | २५ | मुद्गीथा | दुद्गीथा |
| ३९ | ७ | दर्शनाद्धेतोः | दर्शनाद्धेतोः |
| ३९ | ९ | सूद्गीथ | सूद्गीथविद्यासूद्गीथ |
| ३९ | १४ | तस्मादुभय | तस्मादुभयं |
| ३९ | २१ | गृहीत- | गृहीतः |
| ३९ | २५ | मुद्गीथ | मुद्गीथमुपासीत |
| ३९ | २८ | अथ | यथा |
| ३९ | ३४ | उद्गीथबुद्धया | उद्गीथबुद्ध्या |
| ४० | ३ | तृतीयपक्ष | तृतीयः पक्षः |
| ४० | ८ | चतुर्थ पक्षः | चतुर्थः पक्षः |
| ४० | २० | अविशेषतो | प्रविवेश ततो |
| ४० | २२ | सुहयः | सुहयः सैन्धवः |
| ४० | ३३ | काशात्मनः | काशात्मानः |
| ४२ | ४ | मनोमय | मनोमयविज्ञानमय |
| ४२ | ७ | अथोऽन्तर | अन्योऽन्तर |
| ४२ | ११ | मिहेतरेसाम्ये | मिहेतरसाम्येन |
| ४२ | १२ | सोऽकामयद् | सोऽकामयत |

| पृष्ठे | पङ्क्तौ | अशुद्ध पाठः | शुद्ध पाठः |
|---|---|---|---|
| ४२ | २२ | उपसहारा | उपसंहार |
| ४२ | २४ | स्तत्र | स्त्वत्र |
| ४२ | २५ | | आनन्दादयः प्रधानस्य ॥१॥ प्रियशिरस्त्वाद्यप्राप्ति रु- पचयापचयौ हि भेदे ॥२॥ इतरे त्वर्थसामान्यात्। ३। |
| ४२ | २७ | धर्माः | धर्माः सन्तीत्यतः |
| ४२ | २६ | विशिष्यं | विशेष्यं |
| ४३ | १३ | पुरुषविषयसादर | पुरुषविषयमादरं |
| ४३ | ३१ | प्रहमस्ति | प्रहणमस्ति |
| ४५ | १ | प्रतिष्ठित | प्रतिष्ठितं |
| ४५ | ५ | सृष्ट्य | सृष्ट्य |
| ४५ | १७ | मानसमअसं | मानमसमअसं |
| ४५ | १७ | विज्ञानस्त्वयोः | विज्ञानमयत्वयो |
| ४५ | २३ | आनन्दादय | तथाचैते आनन्दादय |
| ४७ | १४ | | इत्यवधारणादर्थ निर्णया- धिकरणम् ॥ |
| ४७ | १७ | विधिपारिनिष्ठा | विधिपरिनिष्ठा |
| ४७ | २१ | अशित्वाचामन्ति | अशित्वा चाचामन्ति |
| ४७ | २३ | नग्नताकाललक्षण | नग्नताच्छादनलक्षण |
| ४८ | १ | विधिरित्युक | विधिरित्युक्तं |
| ४८ | ३ | पाठः | पाठम् |
| ४६ | १८ | गेण्णौ | गेण्णौ तौ गेण्णौ |
| ५० | २६ | विलक्षण | विलक्षणं |
| ५० | ३० | वज्ञीय | पज्ञीय |
| ५१ | १ | तस्मादृयषा | तस्मादृयो |
| ५१ | २२ | प्रधोन | प्रधानो |

| पृष्ठे | पङ्क्तौ | अशुद्ध पाठः | शुद्ध पाठः |
|---|---|---|---|
| ५१ | २७ | सामर्थ्या | सामर्थ्या |
| ५२ | ११ | श्रवण | श्रवणे |
| ५२ | २२ | पौर्वापर्य्य प्रसङ्ग | पौर्वापर्यप्रसङ्गे |
| ५३ | ६ | प्राप्त | प्राप्ते |
| ५५ | १ | सर्वषामिति | सर्वेषामिति |
| ५५ | २८ | प्रयत्र | प्रयत्नं |
| ५६ | १२ | गन्धापाप्त्यादि | गन्धाप्राप्त्यादि |
| ५७ | २५ | क्लेश | क्लेशौ |
| ५६ | १८ | अशना | अशनाया |
| ६० | १२ | श्रवण | श्रवणा |
| ६० | १७ | द्वितीयप्रश्न | द्वितीयप्रश्ने |
| ६० | ३३ | बचनयोरप्यक | बचनयोरप्यैक |
| ६१ | १० | अग्द्र्यश्च | अदृश्यश्च |
| ६२ | १ | स या | स यो |
| ६२ | २४ | त्रिद्यत | विद्येत |
| ६३ | ६ | विद्यापदेशः | विद्योपदेशः |
| ६४ | २ | सूत्ररेकमधिकरणं | सूत्रैरेकमधिकरणं |
| ६४ | ३ | संहराधिकरणं | संहाराधिकरणं |
| ६४ | ८ | प्राणाग्नि होत्रस्य | प्राणाग्निहोत्रस्य |
| ६४ | १६ | भाजने | भोजने |
| ६४ | २८ | श्रुणोति | शृणोति |
| ६५ | २६ | प्राणकाशयारैक्येन | प्राणाकाशयोरैक्येण |
| ६७ | १ | परम | परमं |
| ६८ | १ | श्रोत्रण | श्रोत्रेण |
| ६८ | १ | शृण्वन्ति | शृण्वन्ति |
| ६८ | ३३ | हेतून् | हेतून |
| ६६ | ११ | मनश्चिद्यादीमा | मनश्चिदादीनां |

| पृष्ठे | पङ्क्तौ | अशुद्ध पाठः | शुद्ध पाठः |
|---|---|---|---|
| ६६ | १४ | अग्नि व मृत्युः | अग्निर्वै मृत्युः |
| ७० | ४ | लाकान्तरसंचारी | लोकान्तरासंचारी |
| ७० | २४ | वादाचित् | कादाचित् |
| ७१ | ३ | लाकान्तरे | लोकान्तरे |
| ७१ | ६ | यथायासते | यथोपासते |
| ७२ | १ | कबा | कर्म्मा |
| ७४ | २ | मुद्गीर्थ | मुद्गीथं |
| ७५ | १३ | चिर | चिरं |
| ७६ | १० | अनुपपत्तस्तु | अनुपपत्तस्तु |
| ७६ | १५ | गार्गिः | गार्गि |
| ७६ | १५ | विधृता | विधृतौ |
| ७७ | ३ | इत्युक्त | इत्युक्तं |
| ७७ | ४ | बिभागा | विभागो |
| ७७ | ६ | नत्व | नत्त्व |
| ७७ | १६ | तस्याविद्याद्विषयत्वात् | तस्याविद्यद्विषयत्वात |
| ७८ | १० | एव | एवं |
| ७८ | १२ | सामाना | समाना |
| ७९ | १४ | ऊर्ध्वाश्चवृत्ता | ऊर्ध्वाश्चावृत्ता |
| ८० | २१ | यद्यपि | यद्यपि |
| ८१ | २५ | चाक्रायण | चाक्रायणो |
| ८१ | ३३ | मद्द | मद्यं |
| ८१ | ३३ | सिञ्चयुः | सिञ्चेयुः |
| ८१ | ३४ | दित्यदि | दित्यादि |
| ८२ | २६ | अनुष्ठीयमानैयज्ञा | अनुष्ठीयमानैर्यज्ञान |
| ८३ | ४ | विद्या | विद्यां |
| ८३ | ८ | ब्रह्मवित्वम | ब्रह्मवित्वम् |
| ८५ | २४ | विधिरिपति | विधिरिति |

| पङ्क्तौ | अशुद्ध पाठः | शुद्ध पाठः |
|---|---|---|
| ३१ | पण्डित्यादति | पाण्डित्यादति |
| ६ | शव्दाच्छ्रवण | शब्दाच्छ्रवण |
| १२ | गृह्हेते | गृह्येते |
| १३ | विद्याः | विद्यायाः |
| १ | कम्मव | कर्म्मैव |
| १७ | तत्र त | तत्र तं |
| ८ | व्रह्मभावना पौनःपुन्यं | व्रह्मभावनापौनःपुन्यं |
| १४ | ह्यग्रयन्ति | ग्राहयन्ति |
| २६ | भेदव्यवहारा | भेदव्यवहारो |
| ३१ | स्वय | स्वयं |
| ३ | ईश्वरप्रत्यगात्मकत्वन | ईश्वरप्रत्यगात्मकत्वेन |
| ७ | अवयेऽपि | अवयवेऽपि |
| १६ | त्मतः | त्मनः |
| २२ | कार्य्यपर्व्वाणां | कार्य्यपर्य्यायाणां |
| २८ | एवनिहािप | एवमिहापि |
| २८ | काय्य | कार्य्य |
| ६ | प्रतोके | प्रतीके |
| २७ | बाच | वाचि |
| ३३ | त्तपेइत्याःहु | पत्तेरित्याहुः |
| १८ | कुशात्तरम् | कुशोत्तरम् |
| २ | तद्व्य देशात् | तद्व्यपदेशात् |
| ४ | तत्काय्यायैव | तत्कार्य्यायैव |
| ६ | तविदित्वा | तेविदित्वा |
| १ | सपद्यते | संपद्यते |
| १ | भोगानारम्भा | भोगानारम्भो |
| १६ | तर्हि | तर्हि |
| १७ | ज्ञाननाश्यत्वाख्याम | ज्ञाननाश्यत्वाख्यानं |

| पृष्ठे | पङ्क्तौ | अशुद्ध पाठः | शुद्ध पाठः |
|---|---|---|---|
| ६६ | ११ | फलभूत । | फलभूता |
| ६६ | २२ | क्ष ायित्वा | क्षपयित्वा |
| ६७ | १६ | वागवृत्य | वाग्वृत्य |
| ६७ | ३१ | न्येति | न्वेति |
| ६७ | ३२ | पतास्तेजोमात्रा: | एतास्तेजोमात्रा: |
| ६८ | १७ | आत्मकत्वातु | आत्मकत्वात्तु |
| ६८ | २० | ताभि | ताभिः |
| १०१ | ४ | ब्रह्मलोक मतिक्रम्य | ब्रह्मलोकमतिक्रम्य |
| १०१ | ५ | मूर्द्धन्य | मूर्द्धन्य |
| १०१ | १८ | सव | सर्वे |
| १०२ | १८ | त त्त्व | तत्त्व |
| १०३ | ८ | गत्यनुस्मृात | गत्यनुस्मृति |
| १०३ | २३ | तयोर्द्ध | तयोर्ध्व |
| १०४ | २ | मामाति | मामोति |
| १०४ | १५ | महोरात्र | महोरात्रं |
| १०५ | ३ | गर्हितम् | गर्हितम् |
| १०५ | २३ | स्मतु | स्मर्तुं |
| १०७ | २ | देवाना | देवानां |
| १०७ | २६ | शाब्दस्य | शाब्दस्य |
| १०६ | ३ | स्वतन्त्रा | स्वतन्त्राः |
| ११० | १ | कार्य्य | कार्य्यं |
| १११ | १ | निर्धापयितु | निर्धारयितुं |
| १११ | ७ | मानत्वत् | मानत्वात् |
| ११५ | १३ | रूपेणाय | रूपेणार्थं |
| ११५ | १४ | सकल्प | संकल्प |
| ११५ | १६ | निमितान्तर | निमित्तान्तर |
| ११६ | १० | ब्रह्मलाके | ब्रह्मलोके |

| पृष्ठे | पङ्क्तौ | अशुद्ध पाठः | शुद्ध पाठः |
| --- | --- | --- | --- |
| ११८ | २१ | ऽनिलयतेऽभयं | ऽनिलयनेऽभयं |
| ११८ | २६ | भीषादेति | भीषोदेति |
| ११६ | ३ | सवषु | सर्वेषु |
| ११६ | ४ | सवविधसुख भागमत्रे | सर्वविधसुखभोगमात्रे |
| ११६ | ४ | केवलभीश्वरण | केलवमीश्वरेण |
| ११६ | ५ | आपा वै | आपो वै |
| ११६ | ५ | लोकाऽसौ | लोको ऽसौ |
| ११६ | ६ | सवाणि | सर्वाणि |
| ११६ | ८ | तहि | तर्हि |
| ११६ | २५ | भुञ्त्रिभ | भुञ्जिमं |
| १२१ | १० | त्वनुभूयेतर | त्वनुभूयेतरे |
| १२१ | २६ | ननूपपलक्षणार्थं | ननूपलक्षणार्थं |
| १२२ | १ | वैके चास्मा ह्लाकात् | वैके चास्माल्लोकात् |
| १२२ | २६ | भवत्यभ्र | भवत्यभ्रं |
| १२३ | १४ | रेतस्यसक्ङ | रेतस्यसक्ङ |
| १२४ | ४ | बन्धविपर्य्य यौ | बन्धविपर्य्ययौ |
| १२४ | २० | किमर्थ | किमर्थं |
| १२८ | ३ | सामं ञस्यात् | सामञ्जस्यात् |
| १२८ | ५ | समं ञसं | समञ्जसं |
| १२८ | ८ | सामं ञस्यं | सामञ्जस्यं |
| १२८ | २८ | सामंञस्यं | सामञ्जस्यं |
| १२६ | २१ | सव | सर्व |
| १३० | ५ | समं ञसं | समञ्जसं |
| १३१ | १३ | धामणः | धर्मिणः |
| १३२ | २ | मुपास्यर्थं | मुपास्त्यर्थं |
| १३४ | २४ | क्लतिः | क्लृप्तिः |
| १३५ | १६ | समंञ्जसमिति | समञ्जसमिति |

| पृष्ठे | पङ्क्तौ | अशुद्ध पाठः | शुद्ध पाठः |
|---|---|---|---|
| १३६ | ८ | संहार प्राप्तिः | संहारप्राप्तिः |
| १३६ | १८ | गुण नामुपसंहारः | गुणानामुपसंहारः |
| १३६ | २२ | दीनामाननन्दरूपतया | दीनामानन्दरूपतया |
| १३६ | २८ | मयाद्धतोरेव | मयाद्धेतोरेव |
| १३६ | ३२ | पूवष्वन्नमयादिषु | पूर्वेष्वन्नमयादिषु |
| १३९ | ३ | शरीर | शरीरे |
| १४० | १७ | ब्रह्मोभावोत्तरं | ब्रह्मभावोत्तर |
| १४० | ३३ | गामिनाम पेक्षि | गामिनामापेक्षि |
| १४२ | ३ | बलीया स्ति | वलीयोऽस्ति |